श्रीस्तुतिः

श्रीकनकधारालक्ष्मीस्तवराजः

श्रीगणेशाय नमः ।
मानातीतप्रथितविभवां मङ्गलं मङ्गलानां वक्षःपीठं
मधुविजयिनो भूषयन्तीं स्वकान्त्या ।
प्रत्यक्षानुश्रविकमहिमप्रार्थिनीनां प्रजानां
श्रेयोमूर्तिं श्रियमशरणस्त्वां शरण्यां प्रपद्ये ॥ १॥

आविर्भावः कलशजलधावध्वरे वाऽपि यस्याः
स्थानं यस्याः सरसिजवनं विष्णुवक्षःस्थलं वा ।
भूमा यस्या भुवनमखिलं देवि दिव्यं पदं वा
स्तोकप्रज्ञैरनवधिगुणा स्तूयसे सा कथं त्वम् ॥ २॥

स्तोतव्यत्वं दिशति भवती देहिभिः स्तूयमाना
तामेव त्वामनितरगतिः स्तोतुमाशंसमानः ।
सिद्धारम्भः सकलभुवनश्लाघनीयो भवेयं
सेवापेक्षा तव चरणयोः श्रेयसे कस्य न स्यात् ॥ ३॥

यत्सङ्कल्पाद्भवति कमले यत्र देहिन्यमीषां
जन्मस्थेमप्रलयरचना जङ्गमाजङ्गमानाम् ।
तत्कल्याणं किमपि यमिनामेकलक्ष्यं समाधौ
पूर्णं तेजः स्फुरति भवतीपादलाक्षारसाङ्कम् ॥ ४॥

निष्प्रत्यूहप्रणयघटितं देवि नित्यानपायं विष्णुस्त्वं
चेत्यनवधिगुणं द्वन्द्वमन्योन्यलक्ष्यम् ।
शेषश्चित्तं विमलमनसां मौलयश्च श्रुतीनां
सम्पद्यन्ते विहरणविधौ यस्य शय्याविशेषाः ॥ ५॥

उद्देश्यत्वं जननि भजतोरूज्झितोपाधिगन्धं
प्रत्यग्रूपे हविषि युवयोरेकशेषित्वयोगात् ।
पद्मे पत्युस्तव च निगमैर्नित्यमन्विष्यमाणो
नावच्छेदं भजति महिमा नर्तयन मानसं नः ॥ ६॥

पश्यन्तीषु श्रुतिषु परितः सूरिवृन्देन सार्धं
मध्येकृत्य त्रिगुणफलकं निर्मितस्थानभेदम् ।
विश्वाधीशप्रणयिनी सदा विभ्रमद्यूतवृत्तौ

ब्रह्मेशाद्या दधति युवयोरक्षशारप्रचारम् ॥ ७॥

अस्येशाना त्वमसि जगतः संश्रयन्ती मुकुन्दं
लक्ष्मीः पद्मा जलधितनया विष्णुपत्नीन्दिरेति ।
यन्नामानि श्रुतिपरिपणान्येवमावर्तयन्तो
नावर्तन्ते दुरितपवनप्रेरिते जन्मचक्रे ॥ ८॥

त्वामेवाहुः कतिचिदपरे त्वत्प्रियं लोकनाथं
किं तैरन्तःकलहमलिनैः किञ्चिदुत्तीर्य मग्नैः ।
त्वत्सम्प्रीत्यै विहरति हरौ सम्मुखीनां श्रुतीनां
भावारूढौ भगवति युवां दम्पती दैवतं नः ॥ ९॥

आपन्नार्तिप्रशमनविधौ बद्धदीक्षस्य
विष्णोराचख्युस्त्वां प्रियसहचरीमैकमत्योपपन्नाम् ।
प्रादुर्भावैरपि समतनुः प्राध्वमन्वीयसे त्वं
दूरोत्क्षिप्तैरिव मधुरता दुग्धराशेस्तरङ्गे ॥ १०॥

धत्ते शोभां हरिमरकते तावकी मूर्तिराद्या
तन्वी तुंगस्तनभरनता तप्तजाम्बूनदाभा ।
यस्यां गच्छन्त्युदयविलयैर्नित्यमानन्दसिन्धा-
विच्छावेगोल्लसितलहरीविभ्रमं व्यक्तयस्ते ॥ ११॥

आसंसारं विततमखिलं वाङ्मयं
यद्विभूतिर्यद्भ्रूभङ्गात्कुसुमधनुषः किङ्करो मेरूधन्वा ।
यस्यां नित्यं नयनशतकैरेकलक्ष्यो महेन्द्रः
पद्मे तासां परिणतिरसौ भावलेशैस्त्वदीयैः ॥ १२॥

अग्रे भर्तुः सरसिजमये भद्रपीठे
निषण्णामम्भोराशेरधिगतसुधासम्प्लवादुत्थितां त्वाम् ।
पुष्पासारस्थगितभुवनैः पुष्कलावर्तकाद्यैः
क्लृप्तारम्भाः कनककलशैरभ्यषिञ्चन्गजेन्द्राः ॥ १३॥

आलोक्य त्वाममृतसहजे विष्णुवक्षःस्थलस्थां
शापाक्रान्ताः शरणमगमन्सावरोधाः सुरेन्द्राः ।
लब्ध्वा भूयस्त्रिभुवनमिदं लक्षितं त्वत्कटाक्षैः
सर्वाकारस्थिरसमुदयां सम्पदं निर्विशन्ति ॥ १४॥

आर्तत्राणत्रतिभिरमृतासारनीलाम्बुवाहै-

रम्भोजानामुषसि मिषतामन्तरङ्गैरपाङ्गै ।
यस्यां यस्यां दिशि विहरते देवि दृष्टिस्त्वदीया
तस्यां तस्यामहमहमिकां तन्वते सम्पदोघाः ॥ १५॥

योगारम्भत्वरितमनसो युष्मदैकान्त्ययुक्तं धर्मं
प्राप्तुं प्रथममिह ये धारयन्तेऽधना याम् ॥

तेषां भूमेर्धनपतिगृहादम्बुधेर्वा प्रकामं धारा
निर्यान्त्यधिकमधिकं वाञ्छितानां वसूनाम् ॥ १६॥

श्रेयस्कामा यमलनिलये चित्रमाम्नायवाचां
चूडापीडं तव पदयुगं चेतसा धारयन्तः ।
छत्रच्छायासुभगशिरसश्चामरस्मेरपार्श्वाः
श्लाघाशब्दश्रवणमुदिताः स्रग्विणः सञ्चरन्ति ॥ १७॥

ऊरीकर्तुं कुशलमखिलं जेतुमादीनरातीन्
दूरीकर्तुं दुरितनिवहं त्यक्तुमाद्यामविद्याम् ।
अम्ब स्तम्बावधिकजननग्रामसीमान्तरेखामालम्बन्ते
विमलमनसो विष्णुकान्ते दया ते ॥ १८॥

जाताकांक्षा जननि युवयोरेकसेवाधिकारे
मायालीढं विभवमखिलं मन्यमानास्तृणाय ।
प्रीत्यै विष्णोस्तव च कृतिनः प्रीतिमन्तो भजन्ते
वेलाभङ्गप्रशमनफलं वैदिकं धर्मसेतुम् ॥ १९॥

सेवे देवि त्रिदशमहिलामौलिमालार्चितं ते
सिद्धिक्षेत्रं शमितविपदां सम्पदां पादपद्मम् ।
यस्मिन्नीषन्नमितशिरसो यापयित्वा शरीरं
वर्तिष्यन्ते वितमसि पदे वासुदेवस्य धन्याः ॥ २०॥

सानुप्रासप्रकटितदयैः सान्द्रवात्सल्यदिग्धैरम्ब
स्निग्धैरमृतलहरीलब्धसब्रह्मचर्यैः ।
घर्मे तापत्रयविरचिते गाढतप्तं क्षणं
मामाकिञ्चन्यग्लपितमनघैराद्रियेथाः कटाक्षैः ॥ २१॥

सम्पद्यन्ते भवभयतमीभानवस्त्वत्प्रसादाद्भावाः
सर्वे भगवति हरौ भक्तिमुद्वेलयन्तः ।
याचे किं त्वामहमिह यतः शीतलोदारशीला

भूयो भूयो दिशसि महतां मङ्गलानां प्रबन्धान् ॥ २२॥

माता देवि त्वमसि भगवान्वासुदेवः पिता मे
जातः सोऽहं जननि युवयोरेकलक्ष्यं दयायाः ।
दत्तो युष्मत्परिजनतया देशिकैरप्यतस्त्वं किं ते
भूयः प्रियमिति किल स्मेरवक्त्रा विभासि ॥ २३॥

कल्याणानामविकलनिधिः काऽपि कारुण्यसीमा
नित्यामोदा निगमवचसां मौलिमन्दारमाला ।
सम्पद्दिव्यः मधुविजयिनः सन्निधत्तां सदा
मे सैषा देवी सकलभुवनप्रार्थनाकामधेनुः ॥ २४॥

उपचितगुरुभक्तेरुत्थितं वेङ्कटेशात्कलि-
कलुषनिवृत्त्यै कल्प्यमानं प्रजानाम् ।
सरसिजनिलयायाः स्तोत्रमेतत्पठन्तः
सकलकुशलसीमा सार्वभौमा भवन्ति ॥ २५॥

॥ इति श्रीवेदान्तदेशिकविरचिता श्रीस्तुतिः सम्पूर्णा ॥